॥ श्रीरामस्तुती जटायुप्रोक्तं अध्यात्मरामायणे ॥

अगण्यगुणमाद्यमव्ययमप्रमेय-
मखिलजगत्सृष्टिस्थितिसंहारमूलम् ।
परमं परापरमानन्दं परात्मानं
वरदमहं प्रणतोऽस्मि सन्ततं रामम् ॥ १॥

महितकटाक्षविक्षेपितामरशुचं
रहितावधिसुखमिन्दिरामनोहरम् ।
श्यामलं जटामकुटोज्ज्वलं चापशर-
कोमलकरांबुजं प्रणतोऽस्म्यहं रामम् ॥ २॥

भुवनकमनीयरूपमीडितं शत-
रविभासुरमभीष्टप्रदं शरणदम् ।
सुरपादमूलरचितनिलयं
सुरसञ्चयसेव्यं प्रणतोऽस्म्यहं रामम् ॥ ३॥

भवकाननदवदहननामधेयं
भवपङ्कजभवमुखदैवतं देवम् ।
दनुजपतिकोटिसहस्रविनाशं
मनुजाकारं हरिं प्रणतोऽस्म्यहं रामम् ॥ ४॥

भवभावनाहरं भगवत्स्वरूपिणं
भवभीविरहितं मुनिसेवितं परम् ।
भवसागरतरणांघ्रिपोतकं नित्यं
भवनाशायानिशं प्रणतोऽस्म्यहं रामम् ॥ ५॥

गिरिशगिरिसुताहृदयांबुजावासं
गिरिनायकधरं गिरिपक्षारिसेव्यम् ।
सुरसञ्चयदनुजेन्द्रसेवितपादं
सुरपमणिनिभं प्रणतोऽस्म्यहं रामम् ॥ ६॥

परदारार्थपरिवर्जितमनीषिणां
परपूरुषगुणभूतिसन्तुष्टात्मनाम् ।
परलोकैकहितनिरतात्मनां सेव्यं
परमानन्दमयं प्रणतोऽस्म्यहं रामम् ॥ ७॥

स्मितसुन्दरविकसितवक्त्रांभोरुहं

स्मृतिगोचरमसितांबुदकलेबरम् ।
सितपङ्कजचारुनयनं रघुवरं
क्षितिनन्दिनीवरं प्रणतोऽस्म्यहं रामम् ॥ ८॥

जलपात्रौघस्थितरविमण्डलसमं
सकलचराचरजीवान्तःस्थितम् ।
परिपूर्णात्मानमद्वयमव्ययमेकं
परमं परापरं प्रणतोऽस्म्यहं रामम् ॥ ९॥

विधिमाधवशम्भुरूपभेदेन गुण-
त्रितयविराजितं केवलं विराजन्तम् ।
त्रिदशमुनिजनस्तुतमव्यक्तमजं
क्षितिजामनोहरं प्रणतोऽस्म्यहं रामम् ॥ १०॥

मन्मथशतकोटिसुन्दरकलेवरं
जन्मनाशादिहीनं चिन्मयं जगन्मयम् ।
निर्मलं जन्मकर्माधारमप्यनाधारं
निर्ममात्मारामं प्रणतोऽस्म्यहं रामम् ॥ ११॥

॥ श्रीरामस्तुती ( तुलसीदास ) ॥

॥ अथ श्रीरामस्तुति ॥

श्रीरामचन्द्र कृपालु भजु मन     हरण भवभय दारुणम् ।
नवकञ्ज लोचन कञ्ज मुखकर     कञ्जपद कञ्जारुणम् ॥ १॥

कंदर्प अगणित अमित छबि    नव नील नीरज सुन्दरम् ।
पटपीत पानहुँ तड़ित रुचि सुचि    नौमि जनक सुतावरम्  ॥ २॥

भजु दीन बन्धु दिनेश दानव    दैत्यवंशनिकन्दनम् ।
रघुनन्द आनंदकंद कोशल    चन्द दशरथ नन्दनम्  ॥ ३॥

सिरक्रीट कुण्डल तिलक चारु    उदार अङ्ग विभूषणम्  ।
आजानुभुज सर चापधर    सङ्ग्राम जित खरदूषणम् ॥ ४॥

इति वदति तुलसीदास शङ्कर    शेष मुनि मनरञ्जनम् ।
मम हृदयकञ्ज निवास कुरु    कामादिखलदलमञ्जनम्  ॥ ५॥

मन जाहि राचो मिलहि सोवर    सहजसुन्दर सांवरो  ।
करुणानिधान सुजान शील    सनेह जानत रावरो । ६॥

एहि भाँति गौरि अशीस सुनि सिय    सहित हिय हर्षित अली ।

तुलसी भवानिहिं पूजि पुनि पुनि   मुदित मन मन्दिर चली ॥ ७॥

जानि गौरि अनुकूल    सिय हिय हर्षनः जात कहि ।

मञ्जुल मङ्गल मूल   वाम अङ्ग परकन लगे ॥

सियावर रामचन्द्र पद गहि रहुँ ।

उमावर शम्भुनाथ पद गहि रहुँ ।

महाविर बजरँगी पद गहि रहुँ ।

शरणा गतो हरि ॥

॥ श्रीरामस्तुती ब्रह्मदेवकृतम् ॥

श्री गणेशाय नमः ।
ब्रह्मोवाचः ।
वन्दे देवं विष्णुमशेषस्थितिहेतुं त्वामध्यात्मज्ञानिभिरन्तर्हृदि भाव्यम् ।
हेयाहेयद्वन्द्वविहीनं परमेकं सत्तामात्रं सर्वहृदिस्थं दृशिरूपम् ॥ १॥

प्राणापानौ निश्चयबुद्ध्या हृदि रुद्ध्वा छित्वा सर्वं संशयबन्धं विषयौघान् ।
पश्यन्तीशं यं गतमोहा यतयस्तं वन्दे रामं रत्नकिरीटं रविभासम् ॥ २॥

मायातीतं माधवमाद्यं जगदादिं मानातीतं मोहविनाशं मुनिवन्द्यम् ।
योगिध्येयं योगविधानं परिपूर्णं वन्दे रामं रञ्जितलोकं रमणीयम् ॥ ३॥

भावाभावप्रत्ययहीनं भवमुख्यैर्भोगासक्तैरर्चितपादाम्बुजयुग्मम् ।
नित्यं शुद्धं बुद्धमनन्तं प्रणवाख्यं वन्दे रामं वीरमशेषासुरदावम् ॥ ४॥

त्वं मे नाथो नाथितकार्याखिलकारी मानातीतो माधवरूपोऽखिलधारी ।
भक्त्या गम्यो भावितरूपो भवहारी योगाभ्यासैर्भावितचेतःसहचारी ॥ ५॥

त्वामाद्यन्तं लोकततीनां परमीशं लोकानां नो लौकिकमानैरधिगम्यम् ।
भक्तिश्रद्धाभावसमेतैर्भजनीयं वन्दे रामं सुन्दरमिन्दीवरनीलम् ॥ ६॥

को वा ज्ञातुं त्वामतिमानं गतमानं मानासक्तो माधवशक्तो मुनिमान्यम् ।
वृन्दारण्ये वन्दितवृन्दारकवृन्दं वन्दे रामं भवमुखवन्द्यं सुखकन्दम् ॥ ७॥

नानाशास्त्रैर्वेदकदम्बैः प्रतिपाद्यं नित्यानन्दं निर्विषयज्ञानमनादिम् ।
मत्सेवार्थं मानुषभावं प्रतिपन्नं वन्दे रामं मरकतवर्णं मथुरेशम् ॥ ८॥

श्रद्धायुक्तो यः पठतीमं स्तवमाद्यं ब्राह्मं ब्रह्मज्ञानविधानं भुवि मर्त्यः ।
रामं श्यामं कामितकामप्रदमीशं ध्यात्वा ध्याता पातकजालैर्विगतः स्यात् ॥ ९॥

॥ इति श्रीमदध्यात्मरामायणे युद्धकाण्डे ब्रह्मदेवकृतं रामस्तोत्रं सम्पूर्णम् ॥